२ आ (शुभ)

॥ श्रीजिनाय नम ॥

# ॥ श्रीयुगादीशदेशना ॥

( कर्ता—श्रीसोमसडनगणी )

छपावी प्रसिद्ध करनार

पडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )

वीरसवत्—२४३८    विक्रमसवत्—१९६९    सने १९१२

कि रु–१–८–०

॥ श्रीजिनाय नम ॥

## ॥ अथ श्रीयुगादीशदेशना प्रारभ्यते ॥

( कर्ता श्रीसोमममडनगणी )

छपावी प्रसिद्ध करनार—पडित श्रावक हीरालाल हसराज ( जामनगरवाळा )

श्रीमानादिजिन 'श्रेयो । विश्राणयतु 'त्राविना ॥ युगादो युग्मिना 'शास्ता ।'धर्मकर्मव्यवस्थि ते ।॥ १ ॥ यस्या 'श्रवणमात्रेण'। जन्मकोटिकृतान्यपि ॥ नश्यत्येनासि'जतूना'। सा 'युगादिजि नेशितु ॥ २ ॥ पुत्रबोधकरी'धर्म—देशना' किंचिदुच्यते ॥ स्वान्ययो 'पुण्यपोषाय'। मया 'मोपा 'य'चैनसा'॥ ३ ॥'युग्म'॥ तथाहि—युग्मिलोकानृजुजडान् ।' व्यवहारे' प्रवर्तयन्'॥ युगादो श्रीयु गादीश—श्चिर' राज्यमपालयत् ॥ ४ ॥ अथ'प्रथयितु 'पथ्य'। तथ्य 'मुक्तिपथ 'नृणा '॥ स'प्राव्राजी त'स्वय'पुत्रान् । न्यस्य 'राज्ये 'पृथक्पृथक् ॥ ५ ॥ सहस्र' शरद 'स्वामी'। खड्गधाराव्रत 'चरन्'॥ सु' दुस्तप तपस्तप्त्वा । केवलज्ञानमाप्तवान्'॥ ६ ॥ अथ' षट्खण्डभूभर्ता । भरतेश्वरभूपति ॥ आजूह

युगा देश० ३ | सर्वैस्तेनात्मनिर्गता । प्रथम पृच्छ्यते पिता ॥ पश्चाद्यथा'तदादेश'। पुन 'कार्य' विधीयते'॥ १८ ॥
इत्यालोच्याष्टनवति—कुमारा 'स्फटिकाचले'॥ ययु 'प्रश्नयितु तात । वृषभ 'जिनपुगव'॥ २० ॥ प्र
भु 'प्रदक्षिणीकृत्य'। नत्वा'स्तुत्वा 'च' तत्र' ते'॥ उपाविशन् 'यथास्थान'। देवमानवसंसदि'॥ २१ ॥
अथारेभे जगन्नाथ—प्रथम 'पुण्यदेशना'॥ मोहापोहाय 'पुत्राणा'। सदोहाय 'च 'सपदा'॥ २२ ॥
तथाहि—दुष्कर्मरघनोपाया । अतराया 'सुखश्रियां'॥ तपसामामया 'हेया'। कषाया 'प्रथम 'बुधै'
॥ २३ ॥ सकषायो' नर 'सत्तु'। गुणवानपि 'नार्हति ॥ यतो 'न 'विषसपृक्त'। परमान्नमपीष्यते'॥२४॥
यथा 'प्रज्ज्वलितोऽरण्ये'। दवाग्निर्दहति 'द्रुत ॥ कषायवशगो' जतु—स्तथा 'जन्मार्जित तप'॥२५॥
धर्मश्चित्ते दुराधेय'। कषायकलुषात्मना'॥ रगो 'यथा 'कुसुभस्य'। नीलीजानितवाससि ॥ २६ ॥ य
उत्ते दृष्टा त्। थात्यज 'स्पृशन्' स्वर्ण—वारिणापि 'न शुद्ध्यति'॥ सकषायस्तथा' जतु—स्तपसापि 'न शुद्धिभाक्'॥
॥ २७ ॥ हरत्येकदिनेनैव'। तेज 'पाण्मासिक 'ज्वर'॥ क्रोध 'पुन ' क्षणेनापि'। पूर्वकोट्यर्जित त
प ॥ २८ ॥ सन्निपातज्वरेणेव । क्रोधेन 'व्याकुलो' नर '॥ कृत्याकृत्यविवेकेऽन्धो'। विद्वानपि 'जन्मी
भवेत्'॥ २९ ॥ तपोभिर्भृशमुत्कृष्टौ—रावर्जितसुरौ मुनी ॥ करटोत्करटौ 'कोपात'। प्रयातौ 'नरकाव

युगा खण्डपृथिवीभर्तु—र्ज्येष्ठभ्रातुरपि श्रियः ॥ विजित्याशु जिघृक्षाम—स्तीव्रलोभोदयाद्वयम् ॥ ४३ ॥ ए
देश० वं चतुर्भिरप्युग्रैः । कषायैः कलुषाशयाः ॥ कथं तात भविष्यामो । यास्यामो वा गतौ क्व हा ॥४४॥
अथादिशत् पुनः स्वामी । वत्साः कटुफलोदयाः ॥ चत्वारोऽपि विधीयन्ते । न कषाया हितैषिभिः
५ ॥ ४५ ॥ वत्साः स्वज्ञाशयीभूय । भवनिर्वेदकारणम् ॥ सकषायकुटुम्बस्य । दृष्टान्तोऽत्र निशम्यताम् ॥
॥ ४६ ॥ जम्बूद्वीपेऽत्र भरते । निःसमानसमृद्धिभिः ॥ आसीत्स्वर्गपुरस्पर्धि । पुरं विजयवर्धनम् ॥
स्वामी ॥ ४७ ॥ तस्मिन्नुन्निद्रभद्रश्री । रुद्रदेवोऽभिधानतः ॥ श्रेष्ठी श्रेष्ठगुणश्रेणि—पात्रं सत्रं श्रियामभूत्
॥ ४८ ॥ परं स रोषदोषेण । गुणानानप्यदूषयत् ॥ निजं त्रिदोषहतापि । कटुत्वेन यथा जने ॥
॥ ४९ ॥ प्रेयसी श्रेयसीभक्ति—स्तस्याद्भुतगुणवत्यपि ॥ रोषेणाग्निशिखारूपा । सुरूपाग्निशिखाभि
धा ॥ ५० ॥ निमित्तेऽप्यनिमित्ते वा । क्रोधोद्बोधेन तावुभौ ॥ सस्नेहालापहास्यादि । मिथो जातु
न तेनतुः ॥ ५१ ॥ तयोः क्रमादजायन्त । पुत्रास्त्रासोज्झितास्त्रयः ॥ मूगरश्च कुम्भगश्च । सागरश्चेति
नामतः ॥ ५२ ॥ तिस्रोऽथेभ्यसुता नाम्ना । शिवानिकृतिसंचयाः ॥ क्रमेणोद्वाहयामास । यौवने स
सुतैस्त्रिभिः ॥ ५३ ॥ चतुर्भिरपि कोपाद्यैः । कषायैः प्रबलोदयैः ॥ विभज्यैव क्रमात्तेषु । द्वंद्वं द्वंद्व

मया' दत्तोऽथ'दीनार—सहस्र' स्थाप्यता रह' ॥ ६५ ॥ स्नुषाणामिदमाख्येय। न कदाचित्त्वया'प्रिये ॥ कुड्यातरस्थिताऽश्रौपी—दखिल निकृतिश्च तत् ॥ ६६ ॥ अन्यदा चावदत् श्रेष्ठी'। पत्नीमिति'क्लिताविमौ'॥ निधीयमानौ'दीनार—सहस्रौ पश्य'वल्लभे'॥ ६७ ॥ विसूचिकाग्निहृच्छूल—नीरोरगविषादिभि ॥ मृतिश्चेज्जातु'जायेत'। ममाकस्मादतर्किता॥ ६८ ॥ परलोकाध्वपाथस्य'। मम'पत्नि'त्वया तदा ॥ मन्त्रान्नैतद्व्ययेनात्र। देय'सुकृतशम्बल'॥ ६९ ॥ अवमत्य'सुतान्'काते'। विश्वासाश्रोप्यमप्यद ॥ तवैवाख्यायि'यत्पत्नी'। पत्यु 'समसुखासुखा ॥ ७० ॥ रुद्रदेवेन'जायाया'। प्रोच्यमान'रहस्यपि ॥ कुम्भग कपटी कुड्या—तरस्थ' श्रुतवानिद'॥ ७१ ॥ अथान्यदा'तदाम्भ्या। श्वशुरेणार्पित धन'॥ श्वश्रू कथचिदानर्ज्य'। विभज्यादीयते ध्रुव'॥ ७२ ॥ अन्योन्य मत्रयित्वेति'। लुब्धे निकृतिसचये ॥ कैतवेनाहतु श्वश्रू। बाष्पाविलविलोचने ॥ ७३ ॥ युग्म ॥ शिला'ज्येष्ठव धूर्तात—र्गर्वेणोन्नतकधरा ॥ स्नानाभ्यगादिसत्कार। तनोस्तव तनोति'न ॥ ७४ ॥ यौवनोन्मत्तचित्ताभ्या—मावाभ्यामपि'नार यत् ॥ अधुनायास्तजातेने'। तनो'स्नानादिसत्कृति ॥ ७५ ॥ ध्यावा'तु'साप्रत'पश्चा—त्तापज्वलनमात्मन ॥ निर्वापयितुमिच्छाव। श्वश्रूसत्कृतिवारिभि ॥ ७६ ॥ इ

॥ ८८ ॥ आकस्मिकेऽपि मरणे । मम जातुचिदागते ॥ नराम्युत्तारणा' चैव—मेतदुक्तेर्धनार्पणा
त्'॥ ८९ ॥ सर्वकर्मसु' भद्रेव । साहकारतया शिला'॥ मया 'त्यक्ता 'पुरापीति'। तस्या 'स्व 'कथम
र्प्यते '॥ ९० ॥ इत्यालोच्याग्निशिखया'। तत्स्थान 'दर्शित 'तयो '॥ युनाभ्या 'मन्मृतौ 'ग्राह्य । स्व 'वि
भज्येत्संवादि च '॥ ९१ ॥ मातर्भूयाश्चिरायुस्त्व'। किं 'कार्यममुनावयो '॥ इति नि स्पृहतादम्भ—
माविर्भावयत 'स्म' ते '॥ ९२ ॥ वचयित्वान्यदा श्वश्रू'। लोभेनादाय' तद्धन'॥ निशीथेऽन्यत्र 'भूप।
ठे । रहस्तान्या निचिक्षिपे ॥ ९३ ॥ कृतार्थान्या 'ततस्तान्या'। पतिंमातरि' सत्कृति ॥ छायेव' दि
नपूर्वार्धे'। हीयमाना व्यधीयत ॥ ९४ ॥ प्रागादरमथालोक्य । पश्चाच्चानादर 'तयो '॥ चकिताग्नि
शिखा चित्ते'। निजमैदिष्ट' त निधि'॥ ९५ ॥ अनवेदयाव 'सा 'दध्यौ '। हृतो नून निधिर्मम ॥ मा
याविनीभ्यामेताभ्या । यत्स्थान वेत्ति नापर ॥ ९६ ॥ सासूयमथ साक्रादी—ज्ञानीयस्त 'स्नुषे' यु
वा'॥ ते' अपि 'प्रोचतुर्मात—र्निधि 'विद्मो यदि त्रिधा ॥ ९७ ॥ देवस्य सद्गुरूणा 'च । स्पृशानश्चर
णौ तदा ॥ सर्वतीर्थगरीयस्या'। भर्तृमातुस्तथा 'तव ॥ ९८ ॥ कुल्यानां' शपथै 'शुद्धि—र्व्यलीकेन
महत्यपि ॥ प्राणान्तेऽपि 'ततो 'मिथ्या'। कुलीनास्तान्न कुर्वते ॥ ९९ ॥ आवयो 'शपथैरेतै । प्रत्य

युगा
देरां०
११

स्य । ताभ्यां कनिष्ठयोर्दिने ॥ भृशमाराजितस्तात—श्चितयामासिवानिति ॥ १२ ॥ प्रांतपुण्यव्ययार्थं
यत् । स्थापित द्रविणं मया ॥ पुण्यव्ययस्य वित्तस्य । सुस्थानस्थापनं स्मृतं ॥ १३ ॥ सुस्थानं चा
दिमं तत्र । पुत्र पित्रो प्रपूजक ॥ कुम्भसागरौ चैव । पित्रोरत्यतभक्तिकौ ॥ १४ ॥ न्यासीकृतं
धनस्थानं । दर्शयाम्येतयोस्तत ॥ भावी पुण्यव्ययोऽप्येव—मनृणश्चाहमेतयो ॥ १५ ॥ विचिंत्ये
त्याह तौ वत्सा । युवाभ्यां मरणे मम ॥ द्विसहस्रमितं वत्सौ । गृहीतव्यमिदं धनं ॥ १६ ॥ आज
न्मदुर्विनीतत्वा—दनिष्टो कुगरस्तु मे ॥ युवाभ्यामर्पणीयोऽस्मै । न भागोऽस्य धनस्य तत् ॥ १७ ॥
आहतुस्तौ चिरं तातो । नदतात् किं धनेन नौ ॥ छत्राकारस्त्वमस्माक—मापत्तापहरोऽसि यत् ॥
॥ १८ ॥ यतः—यत्र तत्रापि सुलभं । धनं लाभोदये नृणां ॥ हितान्वेषी पुनस्तात । पत्तनेऽपि
न लभ्यते ॥ १९ ॥ उक्त्वा चेति विश्वास्य । वत्सावृजुचेतस ॥ लोभात्ताभ्यां निधिर्लात्वा । रहो
ऽन्यत्र न्यधीयत ॥ २० ॥ ततस्ताभ्यां च विनयो—पचार खंडित पितु ॥ पतगरागवत्तिष्ठे—च्चि
राय न हि कृत्रिम ॥ २१ ॥ खंडिते विनये रुद्र—देवश्चेतसि शंकित ॥ ऐक्षिष्ट सुतयोर्वक्त्र । नि
धिस्थानं रुद्र सुधी ॥ २२ ॥ सत्कलत्रमिवापत्य—शून्यं शून्यमवेदय तत् ॥ पिलदः सिक्कभ्रष्ट-

गीराथ । सांख्यद्रोपारुणेक्षणा ।। यदाह तत्करे लग्ना । कुत्र यात तदैव मे ।। ३५ ।। भक्तिप्रत्यु
क्तिनिश्चैव । प्रवृद्धे कलहे भृश ।। जघान निर्दय श्रेष्ठी । दडेनाग्निशिखा रुषा ।। ३६ ।। भवितव्य
तया तेन । मर्मघातेन तत्क्षणात् ।। श्रेष्ठिनी मुमुचे रुद्र—देवाद्रीतैरिवासुभि ।। ३७ ।। रौद्रध्या
नेन सा मृत्वा । स्वसद्मन्युदपद्यत ।। रक्तेक्षणा विपोदग्रा । कृष्णच्छाया महोरगी ।। ३८ ।। भ्राम्यती
तस्ततो वीक्ष्य । त निधि मुदिताथ सा ।। अधिष्ठाय च लोभेन । तत्रैवास्थात्सदा सुख ।। ३९ ।।
गृह्णाना निधिमन्येद्यु—र्वचयित्वाथ सचया ।। दष्टा वैरेण सर्पिण्या । ममार निकृतिर्लघु ।। ४० ।।
आर्तध्यानेन तत्रैव । नकुली साप्यजायत ।। लोभेन कलहायेते । निधानार्थं मिथश्च ते ।। ४१ ।।
भृश स्वागनिधिप्राप्ति—मुदिता सचयाप्यथ ।। मृता दुष्टोरगीदष्टा । कार्यणोपनिधिस्थिता ।। ४२ ।।
लोभोदयेन सजाता । स्वमद्मन्येव सा शुनी ।। ताडितापि च सा मोहा—ज्जातु मुचति नांगण ।।
।। ४३ ।। विषेण सागरेणापि । निधिलुब्धेन मारित ।। कुम्भग समभूत्सर्पो । गेहात कालदारुण
।। ४४ ।। त वीक्ष्य स्वनिधि लोभा—त्तत्रैवास्थात्स सर्वदा ।। सागरोऽपि निधि गृह्णन् । दष्टस्तेना-
स्मवैरत ।। ४५ ।। तत्काल च मृत सोऽभू—न्नकुलो निधिसन्निधौ ।। युध्येते निधिलोभेन । मि

युगा० देश० १५

सोऽहम् ॥ तत्र माध्यस्थ्यमन्येषां—मन्येषां च विरागता ॥ ५८ ॥ ज्ञानगर्भमुनिर्ज्ञानी। भ्रमन्
गोचरचर्यया ॥ तस्मिन्नेवसरे श्रेष्ठि—पुत्रैर्भिक्षार्थमाविशत् ॥ ५९ ॥ वृत्तं श्रेष्ठिकुटुम्बस्य। ज्ञाना
ज्ज्ञानवद् यथातथ्यं ॥ हा कषायविपाकोऽय—मित्युक्त्वा ऽरूच निर्ययौ ॥ ६० ॥ पुरो भूत्वा मुनिं
श्रेष्ठी। फलिन्यग्रोऽपि पृष्टवान् ॥ तदाऽऽस्यार्थमयोवाच। साधु सौम्य निशम्यतां ॥ ६१ ॥ एतद्भवति
भवद्गृहं—विलसितमतिकटुकषायतरुकुसुमं ॥ निर्वेदाय बुधाना—मबुधजनानां तु हास्याय ॥
॥ ६२ ॥ कुम्भसागरौ पुत्रौ। भुजगनकुलाविमौ ॥ सर्पिण्येषा च ते पत्नी। नकुली निकृति पुन
न ॥ ६३ ॥ सचयैषा शुनी चैव। कषायैस्त्वत्कुटुम्बकं ॥ अन्योन्यरूपतां नीतं। नटपेटकवद् ध्रुवं ॥
॥ ६४ ॥ आख्याते मुनिना पूर्व—भववृत्ते च तत्पुरः ॥ जातिस्मरणतो बुद्धा। जीवाः पचोरगाद
य ॥ ६५ ॥ प्रपद्यानशनं साधो। शान्तवैरा परस्परं ॥ पश्चात्तापेन दुष्कर्म। दलयित्वा ययुर्दिवं
॥ ६६ ॥ ततः सजातसंवेगौ। रुद्रदेवश्च सागरः ॥ श्रुतसागरसूरीश—पार्श्वे प्रव्रजितावुभौ ॥ ६७ ॥
रुद्रदेवऋषिर्जातु। श्रमणावश्यकेऽलसः ॥ प्रवर्तकैः प्रेर्यमाणः। पूर्वाभ्यासेन कुप्यति ॥ ६८ ॥ सा
गरर्षिरपि तपः—स्तपमानोऽपि दुस्तपः ॥ नमति प्रावस्वभावेन। न हि रत्नाधिकानपि ॥ ६९ ॥

युगा ज्ञानपूर्विणौ ॥ ८१ ॥ युवां दुष्कर्मदोषेण । कषायकलुषाशयौ ॥ सेवितं साधुभिर्नित्य—सद्धर्मे
देशव धर्ममंसु ॥ ८२ ॥ ऐहिकामुष्मिकानेक—सुखश्रेणिनिबंधनं ॥ मूलोत्तरगुणग्रामा-धिष्ठितं सुकृताकर
॥ ८३ ॥ गच्छवासं परित्यज्य । सपन्नौ साधुगर्हितं ॥ यच्छीतलविहारित्वं । दुःखदुर्गतिकारणं ॥ ८४॥
१७ नतुन्ने रक्षणुकं ॥ परिणामहितं धर्मे । तयोरित्युपदिष्टवान् ॥ सुपर्वा स तिरोधाय । विद्युदुद्योत
वत्क्षणात् ॥ ८५ ॥ तदास्योत्पन्नसंवेगौ । रुद्रदेवर्षिसूगरौ ॥ श्रुतसागरसूरीशं । व्रतार्थं पुनरीयतुः ॥
॥ ८६ ॥ क्रोधमानाधिकत्वेन । युवयोर्दुष्करं व्रतं ॥ इत्युक्ते गुरुणा रुद्र—देवः संवेगरंगतः ॥८७॥
कारयोऽपि न कुर्यामि । यावज्जीवं मनागपि ॥ जग्राहाभिग्रहं सूरि—साक्षीति व्रतसाग्रहः ॥८८॥
यावज्जीवं गुरुग्लान—बालवृद्धतपस्विषु ॥ विधास्ये विनयं चेच्छ—मभिजग्राह सूगरः ॥ ८९ ॥
ज्ञातार्थभगवैराग्य—रंगौ रुद्रर्षिसूगरौ ॥ गुरुणालोचनां दत्वा । सामगच्छे प्रवेशितौ ॥ ९० ॥
अष्टकालान्यतीचार—परिहारेण नित्यशः ॥ अप्रमत्ततया सम्यग् । स्वाध्यायं सृजतः स्म तौ ॥९१॥
सम्यक्त्वमिश्रमिथ्यात्व-कर्मपुंजत्रयक्षयात् ॥ अष्टधा दर्शनाचारं । सम्यगाचरतः स्म तौ ॥ ९२ ॥ दा
येन क्लिष्टचारित्रा—वरणीयस्य कर्मणः ॥ तौ यथाख्यातचारित्रं । निरतीचारमापतुः ॥ ९३ ॥ ऐहि

ञनायां प्रथमोल्लास समाप्त ॥ श्रीरस्तु ॥

॥ अथ द्वितीयोल्लास प्रारभ्यते ॥

अत्रांतरे 'प्रजो ' पुत्र '। कुरूणामधिप कुरु '॥ तात 'विज्ञपयत्येव'। ललाटघटितांजलि '॥५॥ विपाक 'कर्मणामिह । त्वया 'नो 'गदित ' प्रजो '॥ पर 'पुत्रादिकप्रेम—पाशोऽय 'खलु 'डुस्त्यज '॥६॥ एकतो 'डुर्जयो मोहो '। नवश्रीरन्यतरतु 'न '॥ हा व्याघ्रडुस्तटीन्यायो '। विपमोऽय समाययौ ॥७॥ अथ 'चाख्यत् प्रजुर्वत्सा—स्तुछ वैपयिक सुख '॥ अनित्य च नवेत्तत्तु । नित्यमात्यतिक 'शिवे ॥ ॥ ए ॥ शुनाशुनगतो 'जीव '। प्रेत्य याता 'तु 'यत्र 'य ॥ मनोवच कायचेष्टा । सनवेत्तस्य 'तादृशी ॥ १० ॥ ठाण 'उच्चयर । मध 'हीण 'च 'हीणतरग 'वा ॥ जेण जिहि 'गतव '। चिठावि 'से 'तारिसी ' होइ '॥ ११ ॥ कर्मानुभावजनित । सौम्या सवेगकारण '॥ पचानामथ 'जीवाना । वृत्तमत्र निदर्शन '॥ १२ ॥ तथाहि—अतीववाससकीर्णे '। ससारपुरपत्तने ॥ आसन् 'पचकथाशेप—पितर 'कुलपुत्रका ॥ १३ ॥ अभव्यो 'दूरनव्यश्च '। भव्यश्चासन्नसिद्धिक ॥ तेषां 'तद्भवसिद्धिश्चे—त्यभिधा क्रमतोऽनवन् ॥ १४ ॥ इतश्चासन्निरयपू—स्तिर्यग्पूर्नरपूस्तथा ॥ सुरपू 'सिद्धिपूश्चेति । पुर्य 'पचाति

युगा प्रधानं पुरुषार्थेषु । सेव्यः सद्भिः सदोद्यतैः ॥ २७ ॥ आजीवाद्यर्थमुद्योगो । गृहिणां युज्यते परं
देश॰ ॥ ऐहिकेष्वपि कार्येषु । द्वित्रियामान् मनागिति ॥ २८ ॥ तत्रानवद्यधीश्चाव्य—दिव्य तद्भवसिद्धि
कः ॥ सेवितः सर्वदोद्युक्तैः । पुरुषैरुत्तमोत्तमैः ॥ २९ ॥ अत्रामुत्र शुभोदर्कः । सर्वसावद्यवर्जनात्
२१ ॥ सेवनीयः सदा साधु—धर्म एव हितार्थिभिः ॥ ३० ॥ युग्मं ॥ वाक्यानुसारतस्तेषां । पञ्चानामे
पि पञ्च ते ॥ क्रमेण स्वस्वकन्यायाः । उचिता रुचिता वराः ॥ ३१ ॥ ऊचुस्ते तांश्च युष्मभ्यं । द
द्मो निजसुताः परं ॥ एतदाज्ञावशैर्भाव्य—मिति तैः संश्रुतं च तत् ॥ ३२ ॥ तत्राभव्यो महामोह—
तनयां नरकां गतिं ॥ अतिमोहाङ्गजां दूर—भव्यस्तिर्यग्गतिं तथा ॥ ३३ ॥ पर्यणैषीच्च नृगतिं । भ
व्यः समोहनन्दिनीं ॥ मोहस्य तनयां स्वर्ग—गतिं चासन्नसिद्धिकः ॥ ३४ ॥ क्षीणमोहभुवं सिद्धिं
। पुनस्तद्भवसिद्धिकः ॥ अनुरूपप्रियाप्त्यैवं । भृशं प्रमुदिताश्च ते ॥ ३५ ॥ त्रिभिर्विशेषकं ॥ वधू
वरोचितस्नेह—सनाथप्रीतचेतसः ॥ महामोहादयोऽप्यस्थु—स्तत्र जामातृसन्निधौ ॥ ३६ ॥ अथाभ
व्यादयः पञ्च । स्वस्ववल्लभया समं ॥ सेव्यमाना सदा सौख्यं । निन्युर्बहुमनेहसः ॥ ३७ ॥ अन्ये
द्यु पञ्चभिः पोतै—र्वित्तोपार्जनहेतवे ॥ विधाय सर्वसामग्रीं । नानाभाण्डसमन्विताः ॥ ३८ ॥ पञ्चा

युगा देश० २३ | विविक्तागस्थितिस्थान । नीद्यमाणाश्च सर्वत ॥ पत्रापि दद्दशु पच । कुमगीर्निलयाकृती ॥ ५१ ॥
कपिस्त्तुकुमग्यत—स्तवाजन्य स्सतिष्ठति ॥ सम नरकगत्याख्य—कान्तया मुदिताशय ॥ ५२ ॥
दूरभव्यश्च कथारि—कुमग्या स्वप्रियासख ॥ नदरीकुमग्या भव्यो । नृगत्या सह चावसत् ॥ ५३ ॥
स्वर्गगत्या प्रणयिन्या । सममासन्नसिद्धिक ॥ काकोदुम्बरिकास्फार—कुमग्या न्यवसत्पुन ॥ ५४ ॥
प्रेयस्या सिद्धिगत्याथ । सम तद्भवसिद्धिक ॥ तत्रैव करणीसार—कुमग्या वासमातनोत् ॥ ५५ ॥
आश्चर्यास्येति ते पच । किंचिन्निर्वृतचेतस ॥ खादिरान पपुस्तत्र । तृपिता पल्वले क्वचित् ॥ ५६ ॥
क्षुधितास्ते कपित्थादि—फलैरतिपचेलिमै ॥ सदा तत्र सपत्नीका । प्राणवृत्तिमकल्पयन् ॥ ५७ ॥
आद्यौ द्वौ तत्र मुदितौ । मन्येते सुतरा सुख ॥ सुख दु ख च भव्योऽसौ । दु ख चासन्नसिद्धिक
॥ ५८ ॥ दु ख त्वतितरामेक—स्तत्र तद्भवसिद्धिक ॥ तत्रानुकूलवातेना—न्यदा पल्लविता द्रुमा
॥ ५९ ॥ अभव्योऽवग् विलोक्यैता—निति पुष्पफलोद्गम ॥ अचिरादेषु भविता । तत्र शुभमुपस्थित ॥ ६० ॥ दूरभव्योऽथ तद्वाक्य-मनुमेने प्रमोदभाक् ॥ भव्य पुनस्तदाकर्ण्य । नाभूत्पर्वविपादभाक् ॥ ६१ ॥ अदोऽपि चेन्मुद स्थान । विपादस्य तदा किमु ॥ इत्याह तु पुनस्तत्रा—स

युगा देश० २१

श्रान'तदास्य । तत्पत्नी 'नृगतिस्तदा'॥ ७४ ॥ वत्सरेणाहमागते—सौख्यदासन्नसिद्धिक ॥ तस्य स्वर्गगति 'पत्नी'। युक्तमेतत्प्रियेस्वरू ॥ ७५ ॥ अहो प्रकृतिसादृश्य । दपतीनामिहेक्ष्यते ॥ यथा मनोवच काये—स्तथा नान्यत्र वीक्षित ॥ ७६ ॥ दूरान्मिलति दपत्यो ॥ सयोग 'सदृशोऽत्र 'यत् ॥ गुणरूपप्रकृत्याद्यै—स्तद्विधेरेव कौशल ॥ ७७ ॥ उक्त च—तत्तिल्लो विहिणया । जाणइ दूरेवि जो 'जहि वसइ ॥ ज जस्स होइ सरिस । त तस्सनिश्जिाय देइ ॥ ७८ ॥ चितयद्भिर्मनस्येव । चतुरस्तानिपेद्य ते ॥ कि कर्तासि त्वमित्युक्त—श्रीख्यत्तन्नवसिद्धिक ॥ ७९ ॥ विना कालविल वेन । नो नि कारणनाथवा ॥ दुरतव्यसनाभोधे—र्निस्तारयत मामित ॥ ८० ॥ मधुलिप्तासिधा रांग्र—ग्रसनप्रेतिम ह्यद ॥ स्थान 'नहुविधापाये—र्मतितुच्छसुख च यत् ॥ ८१ ॥ इति प्रियोक्तिमा कर्ण्य । पत्नी 'सिद्धिगति 'पुन ॥ प्राणेश 'रोचते' मह्य—मप्येव 'मुदिता जगौ ॥ ८२ ॥ सप्रियस्तैर्न रे सार्ध । ततस्तद्धवसिद्धिक ॥ नावमारुह्य 'वेगेना—ययौ 'सांयात्रिकातिक ॥ ८३ ॥ तस्य स्ववृत्त माख्यायो—त्तीर्य 'तेन सहांबुधि ॥ मिलित सुहृदादीना । सोऽभूच्च 'सुखितश्चिर ॥ ८४ ॥ वत्सा साप्रतमाख्यातो । दृष्टातस्तावदेष व ॥ एतस्योपनय सम्य—गुच्यमानो निशम्यता ॥ ८५ ॥ अत्रो

त्र ॥ ७३ ॥ दधद्भिरुत्तमा मैत्री । चातुर्गतिकजंतुषु ॥ साधुभिर्वर्णिता पत्रा–प्येते समुदिता इति
॥ ७८ ॥ यथैकः काकिनीहेतो–र्निष्पुण्य कश्चिदध्वग ॥ रूपकाणां यथा पूर्वं । सहस्रं निरजीगमत्
॥ ७९ ॥ आस्वाद्याम्रफलं तुच्छ–मपथ्यं च यथा पुरा ॥ अंशमाप नृप कश्चि–त्स्वजीवितनृपश्रिय
॥ ३०० ॥ यत्र तुच्छेंद्रियसुखा–सक्ता केचिज्जनास्तथा ॥ हारयंति इहामुत्र । सुख स्वर्गापवर्गयो
॥ १ ॥ जुगुप्सनीयान् भो भोगान् । तुच्छान् शुक्रादिसंभवान् ॥ विमुच्यारा यता धर्मः । प्राप्यते ये
न निर्वृति ॥ २ ॥ इति साधूक्तमाकर्ण्या–भव्य प्राह हसन्निति ॥ निर्वृत्ति कीदृशी सा वा । दृष्टा
केनात्र कथ्यता ॥ ३ ॥ अत्रायं विषयग्राम । सर्वेंद्रियसुखावह ॥ घृतवेवरपक्वान्न–खर्जुराद्य च भु
ज्यते ॥ ४ ॥ वसनाभरणाद्यत्र । स्वेच्छया परिधीयते ॥ नीयते च सुख काल । क्रीडाहास्यकुतूह
लै ॥ ५ ॥ एतेषां नैकमप्यस्ति । यत्र तत्रापुनर्भवे ॥ को नु दु खात्मके तत्वा–दात्मनीनो यियासति ॥ ६ ॥ अनमत्यैवमेकांत—सुखमप्यपुनर्भवं ॥ गर्तशूकरवन्नित्या–सक्तो विषयकर्दमे ॥ ७ ॥
व्याधिव्याधिजराजन्म–मरणादिभिरर्दित ॥ भ्रमितोनतसंसारे । स वराको निरतर ॥ ८ ॥ युग्म ॥
तथैव दूरभव्योऽस्य । विधास्ये च त्वदीरित ॥ परिणामहित किंतु । चिरेणैवाधुना न यत् ॥ ९ ॥

चेष्टन्ते

। जतूनामतिदुर्लभ ॥ ३३ ॥ बहुशोऽपि मया लौल्यात् । पड्रस्यास्वादिता रमा ॥ सद्गुरुक्तिसुधा जातु । जतुमृदुहरी न तु ॥ ३४ ॥ विद्वानपि न जानाति । सम्यक् तत्त्व गुरुन् विना ॥ यथा दीप विना याते । न पश्यत्यपि शुद्धदृक् ॥ ३५ ॥ ससारासारसौख्याय — प्रक्रमते यथागिन् ॥ मनुष्या
तथा जैनक्रियायै चेत् । करोतर्निर्वृतिस्तदा ॥ ३६ ॥ नानाङ्ग सौख्यसयुक्त — सासारिकसुखादह ॥ निवृत्तो विपसपृक्त — परमान्नादिवाधुना ॥ ३७ ॥ वाणिज्यस्वार्जनेनैव । जिनधर्मेण वर्जित ॥ इयान् दिनव्ययो याद । वैफल्येन दुनोति मा ॥ ३८ ॥ भवाम्भोधिनरी पाप — हरी जतुशिवकरी ॥ दीयतामार्हती दीक्षा । क्षिप्र मे मुनिपुगवा ॥ ३९ ॥ सांतरायो यतो धर्म । प्रायो बहुलकर्मणा ॥ अत एवा करिष्ये आशु — धर्मस्य त्वरिता गति ॥ ४० ॥ इत्यमुत्सर्पिसवेग । प्राव्राजीन्मुनिसन्निधौ ॥ ससारवासमुत्सृज्य । श्लेष्माणमिव स द्रुत ॥ ४१ ॥ अप्रमत्त सदा साधु — धर्मानुष्ठानमाचरन् ॥ कृत्स्नकर्मक्षयादाप । मुक्ति तन्नरसिद्धिक ॥ ४२ ॥ प्रायो नरकतिर्यक्षु । सचरन् पापकर्मभि ॥ अज्ञानकष्टक्रियया । जातु स्वर्गिनरेष्वपि ॥ ४३ ॥ भाग्यहीन इव स्वर्ण — निधिना भव्यचेतन ॥ अनतेनापि कालेन । लप्स्यते पदमव्यय ॥ ४४ ॥ युग्म ॥ अनतेनाथ कालेन । दूरभव्यश्च से

त्स्यति ॥ सप्ताष्टैश्च भवैर्भव्य—स्त्रिजिश्चासन्नसिद्धिक ॥ ४५ ॥ तस्मिन्नेव भवे चाप्त । सिद्धि तद्भ
वसिद्धिक ॥ तारतम्येन मोहस्य । भिदामीपाममपीत्यभूत् ॥ ४६ ॥ यावान् यस्य भवेन्मोह—स्ताव
ती तस्य ससृति ॥ तन्मोहचयापचया—नुगा ससृतिरंगिना ॥ ४७ ॥ तदैश्वर्यप्रियापत्य—पचेद्रि
यसुखादिपु ॥ वत्सा व्यामोहमुत्सृज्य । मनो धर्मे निधीयता ॥ ४८ ॥

॥ इति तपगच्छनायकश्रीमुनिसुदरसूरिशिष्यश्रीसोममडनगणिविरचिताया श्रीयुगादीशदेश
नायां द्वितीयोल्लास समाप्त ॥ श्रीरस्तु ॥

॥ अथ तृतीयोल्लास प्रारभ्यते ॥

इतश्चावसरे तस्मिन् । कुमार केरलाह्वय ॥ प्रणम्य त्रिजगन्नाथ । विनयेन व्यजिज्ञपत् ॥
॥ ४९ ॥ मुक्ति मोहोज्झनादेव । स्वामिन्नादिष्टवान् भवान् ॥ मोहागवर्जनादेव । भवेन्मोहोज्झन
पुन ॥ ५० ॥ मोहाग प्रथम चात्र । लक्ष्मीरेव स्मृता बुधै ॥ या हि मोहनवल्लीव । व्यामोहयति
मानव ॥ ५१ ॥ चतुरगचमूरस्या । सर्वेन्द्रियसुखावहा ॥ त्रिवर्गसाधन सा तु । लक्ष्मीर्मोक्तु न श
क्यते ॥ ५२ ॥ पुनराख्यद्विभु पुत्र—हिताय विहितादर ॥ ऐहिकामुष्मिकानर्थ—निबन्धनमिय र

युगा | देश० | ३३

क्षुणे 'शाखांतरं व्रजत्'॥ ६५ ॥ फलितक्षेत्रवन्नित्य । रक्षणीय 'सुयत्नत ॥ दारुण परिणामे च । कु
पथ्यस्येव 'भोजन'॥ ६६ ॥ त्रिभिर्विशेषकं ॥ तथा प्रायोऽत्र 'मर्त्याना'। यौवनोन्मत्तचेतसा'॥ सर्वो
पि 'श्रीविकाराय'। राज्यश्रीस्तु 'विशेषत '॥ ६७ ॥ राज्यश्रीसपदुन्मत्ता । जात्यधा 'इव भूभुज ॥
पुरस्थमपि 'नेक्षते । जन 'दिव्यदृशोऽपि 'हि '॥ ६८ ॥ तथा 'बधिरवद्भूपा '। प्रगुणश्रवणा 'अपि'॥
पार्श्वस्थानामपि 'प्रायो । वाक्यमाकर्णयति 'न ॥ ६९ ॥ जने 'खलपरावृते—'र्जिह्मा 'स्वार्थसिद्धये'
॥ मूका 'इव 'सवाचोऽपि । नृपा नैव वदत्यपि ॥ ७० ॥ राज्यलक्ष्मीमदोन्मत्ता'। गजा 'इव 'निरंकु
शा ॥ मतापितृप्रजा 'धर्मा—राममुन्मूलयत्यमी ॥ ७१ ॥ सुताश्च 'चाटुवचनै—र्वेना धैरनुजीविभि '॥
आत्मान 'मत मन्यते'। देवेभ्योऽप्यधिक 'नृपा '॥ ७२ ॥ पूज्यानपि 'ततो 'देवान्'। मुनीन् 'स्वजन '
बाधवान् '॥ पितरौ 'चापि 'गर्वेण'। न 'नमन्ति 'नराधिपा '॥ ७३ ॥ असुदरमपि 'स्वोक्त '। स्थापयत्य
तिसुदर '॥ परै 'सुदरमप्युक्त । नृपा पुनरसुदर '॥ ७४ ॥ तमेव 'बहुमन्यते '। नरस्यैव 'च 'वचो हित'
॥ सुहृत्त्वे 'सेवकत्वे 'वा '। तमेव स्थापयति 'च '॥ ७५ ॥ नृपास्तमेव 'शसति '। तस्यैव 'ददते 'धन'॥
मत्रयति 'च 'तेनैव '। सम 'गोष्ठी 'च 'कुर्वते ॥ ७६ ॥ यस्तेषामजलि 'कुर्यात् । स्तव 'वाक्यैश्च 'चाटुभि '

युगा गृहं तस्य । लक्ष्मीरेवमचिंतयत् ॥ ८८ ॥ अस्त्रीमपि लघते । तरसापि महार्णवं ॥ आरोहत्यंचन
देश० स्याग्र । विवरं प्रविशति च ॥ ८९ ॥ मामाप्तुमिच्छवो लोका—स्तथान्यान्यपि भूरिश ॥ क्षुत्तृट्शी
तातपादीनि । महाकष्टानि कुर्वते ॥ ९० ॥ तथापि स्या न वा तेषा । भाग्यकर्मानुभावत ॥ च
३५ तुर्णामपि वर्णाना । मान्यतामपि मामिति ॥ ९१ ॥ आसंगेन विनष्टोऽयं । शौचाचारकदाग्रहात् ॥
पश्चात्क्षिपति पादेना—गच्छती स्वयमोकसि ॥ ९२ ॥ चतुर्भि कलापकं ॥ अत्यासंगाद्विनष्टोऽयं ।
शुचिरोऽस्तथा मया ॥ नाद निम्ननीयस्त—न्निर्धनीकृत्य सप्रति ॥ ९३ ॥ शौचाचार विमुच्याशु ।
मामवाप्तु पुनर्यथा ॥ चिरं वहति दीनात्मा । मातगस्याप्युपानहौ ॥ ९४ ॥ इत्यालोच्य मुमोचाशु
। कमला तन्निकेतन ॥ इन्द्रजालमिवानेशत् । धनं सर्वं तदैव च ॥ ९५ ॥ यत —लक्ष्मी शनै
शनैरेति । निर्याति युगपत् पुन ॥ पष्ट्या पलैर्जलैः पूर्णा । रिच्यते यद्वटी क्षणात् ॥ ९६ ॥ नि
धनत्वाच्च सर्वत्र । सुहृत्स्वजनबंधुषु ॥ अनादरपदं जज्ञे । शुचिरोद्र शनै शनै ॥ ९७ ॥ यस्यार्थ
स्तस्य मित्राणि । यस्यार्थस्तस्य बांधवा ॥ यस्यार्थ स्वजनाश्चापि । तस्य स्युर्नहरो जना ॥ ९८ ॥
स्वस्वार्थरसिका नित्यं । सुहृत्स्वजनबांधवा ॥ लक्ष्मीवतं निषेवते । फलितद्रुमिवांडजा ॥ ९९ ॥

युगा | स नमस्त्वासनं दत्ते । तस्योत्तिष्ठति सन्मुखं ॥ वहत्युपानहौ तस्य । पादौ मृज्ञाति चान्वहं ॥ १२ ॥
देश० | तमेव सेव्यमानस्य । सर्वशौचकदाग्रहं ॥ अनेशत् शुचिवोद्रस्य । तृष्णातरलितात्मनः ॥ १३ ॥
आराद्ध शुचिवोडेण । तया सुचिरसेवया ॥ सोऽवग् नंद ममायुक्तो–पचारं कुरुषे किमु ॥ १४ ॥
३७ | शुचिवोडोऽप्यवग् स्वामिन । शृणु दीनदयापरः ॥ धनाय त्वभ्रमं भूरि–भुवं दारिद्र्यविद्रुतः ॥१५॥
परं काप्यासवान्नाहं । काणामपि कपर्दिकां ॥ प्रस्थितोऽहं निराशः सन् । स्वदेशाभिमुखं ततः ॥१६॥
तव देवकुले वीक्ष्यां–नुज्ञात ते महत्तर ॥ पृष्टश्च सेवितुं लग्नो । धनाशापाशयंत्रितः ॥ १७ ॥
शिक्षा | तत्तारय प्रसद्यास्मा–न्मां दारिद्र्यमहार्णवात् ॥ इत्युक्ते शुचिवोडेण । मातंगोऽपि जगाविति ॥१८॥
गृह्णातु साधनोपाय–युक्तां विद्यामिमां जवात् ॥ महाप्रसाद इत्युक्त्वा ॥ सोऽपि जग्राह तां मुदा ॥
॥ १९ ॥ कृतार्थं मन्यमानः स्वं । ततोऽसौ स्वगृहं गतः ॥ सर्वसाधनसामग्री–पूर्वं मंडलमालिख
त् ॥ २० ॥ आलिख्य यक्षिणीं तत्र । पूजयित्वा च यावता ॥ मंत्रं स्मरति तावद्धि । विस्मृतं त
गलन् | स्य तत्पदं ॥२१॥ भूलनष्टकपित् । स विलक्षाननस्ततः ॥ मातंगस्योक्तवान् गत्वा । स्वस्वरूपं य
थास्थितं ॥ २२ ॥ मातंगोऽप्याह भद्रामु । पदं विद्याभिमंत्रितं ॥ गृह्णीष्वेष्टप्रदो भावी । पूजितो य

युग। देश० ३९

ऽवदन्मात । क गताभूरियच्चिर ॥ ३५ ॥ उवाच श्रीरियत्काल—मगा'मातगसद्मनि ॥ को'मात
ग'स इत्युक्ते'। शुचिवोडेण'साक्षपत ॥ ३६ ॥ वहन्नुपानहौ'यस्य'। पृष्टस्थो'धनकाम्यया ॥ शु
चिवोद्र'सृजन्'सेवा । सुचिर दुःखमन्वभू ॥ ३७ ॥ शौचेनाथात्तमुक्तेन । लज्जानतकधर ॥ शु
चिवोद्र स सर्वत्र । हास्यास्पदमजायत ॥ ३८ ॥ शुचिगोद्र 'श्रिया त्यक्त '। पश्चात्तापाग्निना'ज्वलन्
॥ जीवितव्यावधि प्राण—वृत्त्याप्यासीत्'सुदुःखित '॥ ३९ ॥ तामेवाथ'श्रिय'तत्वात् । श्रीदेवोऽमु-
स्त'देवता ॥ त्यागभोगमहत्त्वादि—फला 'साक्षादिहैव'या ॥ ४० ॥ रोपनोपफल'येपा'। प्रत्यक्ष'
नात्र'वीक्ष्यते'॥ अजागलस्तनप्राये । किमु तद्देवतान्तरै ॥ ४१ ॥ इति देवान्तराण्येप । परिहृत्य'प्र
मोदभाक् ॥ श्रीमूर्तिमेव'पुष्पाद्यै—स्त्रि' पूजयति'नित्यश ॥ ४२ ॥ अन्यदा स श्रिय प्रोचे । नि
रीक्ष्य'प्रहसन्मुखी ॥ किं'हासकारण मात । सापि त्वद्वृत्तमित्यवक् ॥ ४३ ॥ किं तन्मद्वृत्तमित्यु
क्ता । श्रीदेवेन'पुनर्जगौ ॥ यथास्थितार्थवचनान्,। निहतान्तरशात्रवान् ॥ ४४ ॥ उत्तार्य भवपाथो
धे '। प्राणिनो नयत' शिव'॥ सुरासुरनराधीश—प्रणतान्मयामलान् ॥ ४५ ॥ देवाधिदेवान्'सर्व
ज्ञा—नत्रामुत्र'च शपुप ॥ 'जिनान्'हित्वा'जगज्जन्तु—करुणार्द्रितचेतस ॥ ४६ ॥ आराधयसि'
—यात्रनकीर्ति नच्चा पारधूलामा न

युगा | नादौ '। स्वद्व 'चापि 'यथेप्सित '॥ ५८ ॥ दानशीला 'पुराप्येषा । पत्या 'चैन प्रणोदिता ॥ मुनिङ्ग
देश० | स्थितदीनेभ्य । श्रद्धयादाद्यथार्थित ॥ ५९ ॥ अन्यदा 'तत्पुरोद्याने । केवली 'समवासरत् ॥ श्रद्धा
४१ | शुचेतसोऽनेके '। वदनायाययुर्जना ॥ ६० ॥ भोगवत्या 'सम पत्न्या । भोगदेवोऽपि 'चाययौ ॥ व
दित्वोपाविशन् सर्वे । धर्ममाख्यच्च केवली ॥ ६१ ॥ तथाहि—लक्षाश्चतुरशीतिर्या । प्रथिता जीव '
योनय ॥ भ्राता जतुभिरत्राणे—स्ता 'सर्वा 'अप्यनतश ॥ ६२ ॥ ये 'पुद्गलपरावर्ता । अनन्तोत्सर्पि
णीमिता ॥ ससरद्भिस्तु 'ससारे । पूरितास्तेऽप्यनतश ॥ ६३ ॥ पर ससारकातारे । भ्रमद्भिरपि 'दु
र्लभ '॥ कृष्णचित्रकवज्जीवै । कापि 'न प्रापि सद्गुरु ॥ ६४ ॥ अथासेऽपि 'गुरौ धर्म । तद्धुक्त 'न
हवो 'हृदा '॥ पापा 'पुस्तकवृताका—न्यमूनीत्यवजानते ॥ ६५ ॥ केचित्तु तत्र त धर्म । सम्यग् 'श्र
द्दधते हृदि '॥ न 'कर्तुमीशते किंतु '। निबद्धनरकायुप ॥ ६६ ॥ कियतस्तु महात्मान । सम्यग् श्र
द्धाय मानसे '॥ सर्वशक्त्या 'सृजतीह । धर्म 'सद्गुरुज्ञापित '॥ ६७ ॥ महिम्ना तस्य धर्मस्य '। सुखुत्तरु
त्तरोत्तरा '॥ पदवी ते लभन्ते च । महानदपदावधि ॥ ६८ ॥ अथावसरमासाद्य । भोगदेवेन 'केव
ली '॥ कि 'दानस्य 'फल 'स्वामि—न्निति पृष्टो 'जगाद त ॥ ६९ ॥ पुरे 'विशालशालाख्ये '। महेन्य

थ'तन्मृतिमाकर्ण्य । भोगदेवो विषादभाक् ॥ तस्थौ तत्रैव सार्थेश—सदनासन्नवेश्मनि ॥ ८२ ॥
ध्यातवाश्चेयती रात्रिं'। य पृष्टुमहमागत ॥ दैवात्तस्मिन् मृते'को मे । प्रश्नार्थं'कथयिष्यति ॥८३॥
अथान्यदा'सुत श्रेष्ट'। सुषुवे'धनसुंदरी'॥ दास्या वर्धापित 'सद्य । सार्थवाहो'धनाशया ॥ ८४ ॥
स तु द्रव्यव्ययाद्भीरु—मौनमालंब्य 'तस्थिवान् ॥ विलक्षवदना'दासी'। निराशागाद्यथागत ॥८५॥
अन्यदा गृहमायात । सार्थवाहश्चतुष्पथात ॥ सखेद'धनसुंदर्या'। जगदे'शृणु'वल्लभ ॥ ८६ ॥ प्रा
गममाजातपुत्राया । पुण्यै'पुत्रोऽधुनाजनि ॥ न तत्र'विदधे'वर्धा—पनमात्रमपि'त्वया ॥ ८७ ॥
त्यागभोगभयाद्भीरु । कार्पण्यार्जितदुर्यशा ॥ भूभारभूतया 'तर्हि'। किं'कर्तासि' श्रियानया ॥८८॥
दध्यौ'श्रुत्वेति'खिन्नोऽसौ'। न'मे चित्तानुगा'प्रिया'॥ यदर्थोपार्जनक्लेश'। जानात्येव न मूढत'॥
॥ ८९ ॥ अत्यर्थमर्थितस्यापि । स्वजनैरर्थिभिस्तथा ॥ न मे'कपर्दिकामात्र—मप्युत्तरति'चेतस ॥
॥ ९० ॥ पत्नी'त्वर्थार्जनक्लेशा—नभिज्ञा'व्ययधीर्धन ॥ पुण्ये'वर्धापनादौ'म—त्सद्म'न व्ययिष्य
ति'॥ ९१ ॥ शफर्यंबु कदापुस्था । पिबतीति न बुध्यते ॥ तथैक स्वामिनी'पत्नी । किं'कदा'व्यय
तीत्यपि ॥ ९२ ॥ गृहरक्षानियुक्ता यत् । पत्नी'यादृच्छिकव्यये ॥ गृह'खनति'तन्नून । वृत्ति'सा

स्वेच्छा

बालमिदमालपत् ॥ ५ ॥ एकातेन त्वया कार्यो । न हर्षो यतिपता तव ॥ त्यागभोगविहीनश्री—
र्धने सत्यपि दुर्गत ॥ ६ ॥ मृत्वा नागिलशेरस्य । सुतीभूत क्षुधार्दित ॥ कष्ट पित्रोरपि द्वेष्यो ।
दु ख नयति वासरान ॥ ७ ॥ येन दत्त न भुक्त च । किंतु क्षिप्त धन भुवि ॥ सुखेभ्य स पुमान्
नून । भ्रश्यत्युभयलोकयो ॥ ८ ॥ कर्मकृद्गृहेशोऽभूद् । गृहेश कर्मकृत्पुन ॥ श्रूयते को ह्यम
प्राप्य—मेतत्कर्मविचेष्टित ॥ ९ ॥ भर्तृवृत्तमिति श्रुत्वा । सदु खा धनसुदरी ॥ सद्यो नागिलमा
कार्य । पत्नीपुत्रयुत जगौ ॥ १० ॥ सदा मद्गेहकृत्यानि । दपती कुरुत युवा ॥ पुत्र पालयत चेम ।
स्नेहात्स्नानाशनादिभि ॥ ११ ॥ यदेषोऽपि वयस्थ सन् । भावी कर्मकरो गृहे ॥ प्रतिपद्य तदुक्त
तौ । दपती तस्थतु सुख ॥ १२ ॥ भोगदेवोऽन्यदा रात्रौ । प्रसुप्तो मदिरातरा ॥ उभे शुश्राव सु
दर्यौ । सलपत्यौ परस्पर ॥ १३ ॥ तथाहि प्रथमा प्रोचे । का त्व कथय सुदरि ॥ अन्यारव्यद्भोगदे
वस्य । गृहलक्ष्मीरह शुभे ॥ १४ ॥ ततश्च प्रथमा प्राह । तवास्ते कुशल स्वम ॥ सदु ख तत्र नि
श्वस्य । द्वितीयाप्यन्यधादिति ॥ १५ ॥ अन्यान्यत्यागभोगादि—कार्यव्यापृतचेतसा ॥ मम व्यापा
र्यमाणाया । भोगदेवेन सर्वदा ॥ १६ ॥ भर्तुराज्ञाप्रधानाया । कर्मकर्या इवानघे ॥ परायत्तस्वभा

युगा० देश० ४७

ता निशि श्रिया ॥ सुत स्त्रीरूपधारिण्या ॥ भोगदेवोऽन्यगद्यत ॥ २९ ॥ चतुर्भि —कलापक ॥ भो गदेव त्वया दत्ता । भुक्ता चाहं यथारुचि ॥ अमुचत्येव मुक्ता च । छलितास्मि ततस्त्वया ॥ ३० ॥ तवेष्ट तेन किं कुर्या । सोऽवग्मर्षीव मे सुते ॥ वर्तितव्यमिति श्रीस्तत । प्रतिपद्य तिरोहिता ॥३१॥ तत प्रात प्रवव्राज । प्रशान्ताचार्यसन्निधौ ॥ भोगवत्या समं भोग—देवो भोगविरक्तधी ॥ ३२ ॥ दंपती तौ सदोद्युक्तौ । पुण्यश्रामण्यपालने ॥ स्वाध्यायाध्ययनासक्तौ । तेपाते दुस्तप तप ॥३३॥ विहिताराधनौ प्रान्ते । प्रपन्नानशनौ च तौ ॥ एकावतारौ सर्वार्थ—सिद्धिसपदमीयतु ॥ ३४ ॥ इ तश्च मुमुचे लक्ष्म्या । श्रीदेव सहसैव य ॥ स कुर्वन् जीविकाद्यर्थं । कुकर्माण्यन्यवेश्मनि ॥३५॥ श्रीदेव श्री कथ याता । लि प्रपूजयतोऽपि ते ॥ हस्यमानो जनैरेव । कष्ट नयत्यनेहस ॥ ३६ ॥ युग्मं ॥ जातमात्रे सुते यस्मिन् । जगामाथास्य सद्मन ॥ स्वयमुक्त्वा रमा देवा—द्विपन्न स वि लक्षणे ॥ ३७ ॥ तत श्री पुनरप्यस्य । पुण्यैर्मंदिरमीयुषी ॥ माननीयस्तया चासौ । जात स्वज नबधुपु ॥ ३८ ॥ अथ सपन्नसपत्ति—र्धनोन्मादादसौ पुन ॥ स्वोपनतभोगांग । परिणिन्ये परा स्त्रिय ॥ ३९ ॥ यत —प्रवर्धमान पुरुप—स्त्रयाणामपघातक ॥ पूर्वोपार्जितमित्राणा । दाराणामथ

॥ यत्तत्कारणमुद्दिश्य । श्रीदेवश्चार्चयन्नपि ॥ ५२ ॥ मुक्त सचयशीलोऽपि । रक्षन्नुष्णानिलादपि
॥ भोगदेवश्च भुजानो । ददानश्च यथार्थितं ॥ ५३ ॥ तत्स्थिरीकरणोपाय । कश्चनापि न विद्यते
॥ चलच्चञ्चललोलाया । कमलाया जगत्यपि ॥ ५४ ॥ न ददाति न भुक्ते च । यो निधत्ते तु
तृष्णया ॥ धने सत्यप्यसौ दुःस्थ । पुमान् सचयशीलवत् ॥ ५५ ॥ समा सचयशीलेन । सर्वत्र
बहवो नरा ॥ दलयित्वा निज दास—कर्म ये कारिता श्रिया ॥ ५६ ॥ भोगदेवसमा किं तु
पुरुषास्तेऽत्र पचषा ॥ दत्वा भुक्त्वा च यैरेषा । स्वेच्छया छलिता रमा ॥ ५७ ॥ भुक्ते च श्रद्धया द
त्ते ॥ दत्वा यश्चानुमोदते ॥ भोगदेव इवाप्नोति । सौख्य सोऽभयलोकयो ॥ ५८ ॥ स्वयं याति गृ
हाल्लक्ष्मी । परितापाय भूयसे ॥ सती मुक्ता तु सा पुसा । सुखानन्त्याय जायते ॥ ५९ ॥ किञ्च—
व्याधिव्याधिव्यथाजन्म—जरामरणवर्जितं ॥ आप्तु वत्सा यदीहध्व । निर्वाणपदमव्यय ॥ ६० ॥
स्वभावचपला राज्य—कमला कुलटामिव ॥ परिहृत्य तदा वत्सा । सेवध्व संयमश्रिय ॥ ६१ ॥ इ
ति श्रीतपगच्छनायकश्रीमुनिसुन्दरसूरिशिष्यपण्डितश्रीसोममण्डनगणिकृतायां श्रीयुगादिदेशनायां तृ
तीयोल्लास समाप्त ॥ श्रीरस्तु ॥

युग॰ देश॰ ५१

तात्मना ॥ ७४ ॥ चिरेणापि यतो दुःख । यद्विनश्यति चाचिरात् ॥ यदते च ध्रुव मृत्यु । कथ तद्भण्यते सुख ॥ ७५ ॥ विपादप्यतिरिच्यते । विषया खलु यद्विपात् ॥ एकशो म्रियते प्राणी । विपयेन्यस्त्वनतश ॥ ७६ ॥ एकैकेन पतगाद्या । म्रियते विषयेन चेत् ॥ पचता तत्सम पच । सेवमानस्य निश्चिता ॥ ७७ ॥ वत्सा पचेद्रियार्थेपु । भृशासक्तिमता नृणा ॥ इहामुत्र च दुःखानि । दारुणानि निरामयत ॥ ७८ ॥ तथाहि—कलिगविपये प्रौढ-प्रासादश्रेणिमन्नि ॥ सुवर्णमणिमुक्ताढ्य-मत्र्त्यस्वर्णपुर पुर ॥ ७९ ॥ श्रेष्टी सुमगलस्तत्र । नृपामात्यादिसमत ॥ धनदानदयादाक्ष्य—दाक्षिण्यादिगुणास्पद ॥ ८० ॥ कलत्र चाभवत्तस्य । प्रेमपात्र जयावली ॥ भर्त्रादिविनयोद्युक्ता । कुशला गृहकर्मसु ॥ ८१ ॥ चतुष्पष्टिकलादक्षा । सुदरी तनया तयो ॥ देहिनी रूपसौभाग्ये-र्गेहिनीव मनोभुव ॥ ८२ ॥ सान्यदा सुदरेणेभ्य-सुरसुदरजन्मना ॥ सखीजनवृतादर्शि । व्रजती राजवर्त्मनि ॥ ८३ ॥ सुदरीदर्शनादेव । सुदर स्मरघस्मर ॥ तामेव सर्वत पश्य-स्तन्मयीभूतमानस ॥ ८४ ॥ जनेऽपि विजने वापि । स्वप्ने वा जागरेऽपि वा ॥ न धृति क्वचिदप्याप । मीन स्वल्प इवाभसि ॥ ८५ ॥ युग्म ॥ मित्रेभ्यो ज्ञातवृत्तात-स्तदवस्थ विलोक्य त ॥ सुमगल ययाचे ता

मतिसामतसाक्षिक ॥ ९७ ॥ स्वामिन्नन्यतरस्यैषा । यथेष्टं दीयतां विभो ॥ आदेशश्च महीजाने-रिति तत्सर्वसमतं ॥ ९९ ॥ रूपलावण्यसौभाग्या—धरीकृतसुरांगना ॥ निरीक्ष्य सुंदरीं कन्या। स स्मरज्वरभरार्दित ॥ ६०० ॥ राजा परिणिनीपुस्तां । नृपोत्तरमिति व्यधात ॥ सम्प्रत्येव ममाकस्मात । शिरोऽर्त्तिरुपमाचटत् ॥ १ ॥ तद्व्यथाव्याकुलो जाने । न व्यक्तिमुदयास्तयो ॥ युक्तायुक्तविमूढस्तत् । कथं कन्यां ददेऽधुना ॥ २ ॥ मुंच त्वं तत श्रेष्ठिन् । वरौ च विसृजाधुना ॥ विमृश्याहं यथा युक्तं । विधास्ये स्वयमेव तत् ॥ ३ ॥ भणित्वेति निजावास—मागतो नृपतिस्तदा ॥ सुंदरीमेव स र्वत्र । पश्यंस्तद्गतमानस ॥ ४ ॥ निश्चलात्मा विमुक्तान्य—व्यापार शून्यमानस ॥ ध्यानकोष्ठास योगीव । नृपोऽन्तःसुंदरीं स्मरन् ॥ ५ ॥ किंच—हस्त्यायां नृपतेस्तस्या । रुच्यै नैकाप्यभूत् प्रिया ॥ चलिताहाररेखाया । रुच्यमप्यशनं यथा ॥ ६ ॥ एकः सुरेष्वनंगोऽपि । मन्ये सम्प्रत्ययं स्मर ॥ स कलोऽपि नराधीशो । येन द्राग् विकलीकृत ॥ ७ ॥ यदुक्तं—विकलयति कलाकुशलं । हसति शुचिं पंडितं विडम्बयति ॥ अधरयति धीरपुरुषं । क्षणेन मकरध्वजो देव ॥ ८ ॥ अथ सेवागतो मंत्री । तादृशं वीक्ष्य भूपतिं ॥ उन्मनोदुर्मना स्वामिन् । किं त्वमद्येति पृष्टवान् ॥ ९ ॥ नृपोऽप्या

स्वामिका' इमा ॥ इत्यालोच्य हृदा श्रेष्ठिन् । कुरुष्वात्र यथोचित ॥ २१ ॥ नृपसक्ता' हि'न' प्राणा ।
अपि' कन्या' पुन 'किमु ॥ तत 'परिणयत्वेना । राजेत्याख्यत्स नैगम ॥ २२ ॥ ततो' हृष्टोऽवदन्म
न्त्री । कार्यसिद्धि नरेशितु ॥ तां गांधर्वविवाहेनो-पयेमे' च मुदा नृप ॥ २३ ॥ रूपलावण्यसौ
भाग्यै—रावर्जितमना नृप ॥ चकार सुदरीमेव । सकलात पुरीधुरि ॥ २४ ॥ अथ तस्यामुदन्नाया ।
महोपेन महौजसा ॥ कुवेरेभ्यतनूजन्मा । तदा रसाग्रह जहौ ॥ २५ ॥ सुदरस्तु स्मराधस्ता—मु
दृढामपि त्वभुजा ॥ दुःप्रापां शेषशीर्षस्थ–मणिमिव' समीहते ॥ २६ ॥ रागाधकारपटलै—रावृतान्तर
लोचन ॥ तदर्कमशुभ्र तत्र । स'तु'स्वस्य'न'पश्यति ॥ २७ ॥ यत —न पश्यति हि जात्यध ।
कामाधो नैव पश्यति ॥ न पश्यति मदोन्मत्तो । दोपमर्थी न पश्यति ॥ २८ ॥ न पश्यति दिवा
घूक । काको नक्त न पश्यति ॥ कामाध कोऽपि पापीयान् । दिवानक्त 'न'पश्यति ॥ २९ ॥ त
त स्मरवशात्मासौ । त्यक्तान्यसकलक्रिय ॥ सुदरीसगमोपाय । सर्वदापि'समीहते ॥ ३० ॥ स'
दासीमथ सुदर्या । मिलितामन्यदा'रह ॥ वस्त्रालकारताम्बूलै । स्वार्थाय'समतूतुषत् ॥ ३१ ॥ सुद
र्यग्रे'तथा'चक्रे । सापि'सुदरवर्णना ॥ यथा'सा'सुदरी'जाता । गाढ'तदनुरागिणी ॥ ३२ ॥ चन्ना

युगा कि बहुना ? पूर्णिमेंदुमुखी त्रस्त-मृगाक्षी गजगामिनी ॥ करभोरु प्रवालोष्ठी । गजकुंभोन्नतस्तनी
देश० ॥ ४६ ॥ सर्वावयवसौंदर्या-ज्जगत्सौभाग्यशालिनी ॥ कामिनीषु त्वमेवासि । शृंगाररसशालिनी ॥४७॥
युग्म ॥ पुन स्मितमुखी सुद-र्युवाच शृणु सुदर ॥ परिणामहितं स्वस्य । न पश्यसि वरं न तत् ॥
४७ ॥ ४८ ॥ दुर्जना कुदृशोऽनेके । परापत्परितोषिण ॥ परेषु सदसद्दोषा-रोपा यत्कस्यमादिम ॥
॥ ४९ ॥ जानीयास्त्वामिहायातं । चेद् दुर्जनमुखान्नृप ॥ क्रोधांधस्तदय कुर्या-द्दारुणास्ते निग्र
हना ॥ ५० ॥ नैतत्कर्म शुभोदर्कं । भवतो भावि सुदर ॥ मित्रे मिले प्रदिपता । कर यत्कुशल
तदा क्रियत् ॥ ५१ ॥ आयच्च सुदर सुभ्रु । हनिष्यति न वा नृप ॥ त्वद्वियोगे तु मत्प्राणा । सम
त्येव व्रजत्स्यमी ॥ ५२ ॥ ततो विषीद मा कांते । यद्भाव्य तद्भविष्यति ॥ यावज्जीवं ध्रुवो नया-
त्संयोग पुनरावयो ॥ ५३ ॥ इति सुदरसुदर्यो-रुक्तिप्रयुक्तिविस्तर ॥ सर्वं शुश्राव भूपाल । कु
ड्यांतरगत स्वय ॥ ५४ ॥ क्रोधाध्मातमना नृप-श्चिंतयामासिवानिंद ॥ गहन स्त्रीचरित्रं हा । न
जानंति बुधा अपि ॥ ५५ ॥ उक्त च-प्राप्तु पारमपारस्य । पारावारस्य पार्यते ॥ स्त्रीणां प्रकृति
वक्राणां । दुश्चरित्रस्य नो पुन ॥ ५६ ॥ कुलशीलवतीर्मन्या । राज्ञीरगणय्य या ॥ पट्टराज्ञी कृ

गता ॥ तदुःखं खिन्नौ नाद । विलापानिति तेन्नंतु ॥ ६९ ॥ प्रार्थनीया । तथा नूत्वा सचिवश्रे
ष्ठिभूभुजा ॥ मदद्यु खमिद वत्से । कथमासासि सप्रति ॥ ७० ॥ सरसैकुलतेवासी । पूर्वमिष्ठ
महीभुज ॥ सहसा किमनिष्टान्–विंपवल्लीव सांप्रत ॥ ७१ ॥ सुता प्राग मुम्मिता वीक्ष्याऽधुना त्वे
व कदर्थिता ॥ नोत्फुल्लसहसा स्वांत । तद्भ्रंघटिन हि तत् ॥ ७२ ॥ दु शीलेयु सपत्नीयुर । भर्तु
र्नान्निमता तथा ॥ निरपत्येव वा पुत्री । पित्रोर्दुःखाय जायते ॥ ७३ ॥ कलंकारं सुता येपा । प
रमंदिरमुंडना ॥ वप्तृवित्तहरी नाभूत् । सुखिता भुवि ते नरा ॥ ७४ ॥ सुदर्शनद्वियंचापद्या–ज्ञात्वं
कृत्य कृत यदि ॥ नैहक्कर्म तथाप्यस्या । प्रजापाल तवोचित ॥ ७५ ॥ यत —अपराधशत साधु ।
सहेदेकोपकारत ॥ शत चोपकृतीर्नीचो । नाशयेदेकदु कृतात् ॥ ७६ ॥ जने कृतापराधेऽपि । नि
क्रोधा स्यु खलूत्तमा ॥ मध्यमा मध्यमक्रोधा । महाक्रोधास्तथाधमा ॥ ७७ ॥ कदुकैरिव मत्तेभ–
कुंभे कीर्मितपूर्विणौ ॥ रणातस्ते करौ वीर । व्यूढौ किमबलाजने ॥ ७८ ॥ प्रलप्येति सुताकंठे ।
विलग्य रुदितौ तथा ॥ यथा सर्व समीपस्थो–ऽप्यासीद्बाष्पाविलेक्षण ॥ ७९ ॥ विमुक्तभक्तपानी
या । विपादविधुराशया ॥ तीक्ष्णदु खभराक्रांता । सुदर्शाह सगद्गद ॥ ८० ॥ प्रसूत्वरयशोज्योत्स्ना–

न ॥ ७२ ॥ यत —पत्ता य कामभोगा । कालमणंत इह सउवभोगा ॥ अपुव्वंपिव मन्नइ । त
हवि अ जीवो मणे सुक्ख ॥ ७३ ॥ अनंतेनापि कालेन । वत्सा जीवो न तृप्यति ॥ कामभोगै
पुरागार—दाहक सलिलैरिव ॥ ७४ ॥ तथाहि—ग्रीष्मर्तौ निर्जलेऽरण्ये । कश्चिदंगारदाहकः ॥
सहादाय पयः कुंभ—मगादंगारहेतवे ॥ ७५ ॥ तस्मिन्नितस्ततो भ्रांत्वा । छित्वा दारूणि भूरिशः ॥
मध्याह्ने ज्वालयत्येष । राशीकृत्य पृथक्पृथक् ॥ ७६ ॥ श्रमणेन प्रयासेन । वृक्षया चाग्निसेवया ॥
ग्रीष्मग्रीष्मानुभावेन । दुस्सहेनातपेन च ॥ ७७ ॥ स तदातितृषाक्रांतो । व्याकुलीभूतविग्रहः ॥
कुंभाखिलांबुपानेऽपि । नाप स्वास्थ्य मनागपि ॥ ७८ ॥ सर्वतोऽपि जलं पश्यन् । भ्रमदृष्टिः स
मूर्छितः ॥ आर्तध्यानपरश्चैव—मतश्चित्तमचिंतयत् ॥ ७९ ॥ तृषार्तः स्वान्यगेहाना—मपीत्यमखि
लं जलं ॥ वापीकूपसरःसिंधू—दन्वतामपि हेलया ॥ १०० ॥ तथापि तृषितो नीर—मीक्षमाणो
भ्रमन्निह ॥ अल्पगाधजलं कूपं । मरुदेशे व्यलोकय ॥ १ ॥ तृणान्निस्तृणं निक्षिप्य । कर्पिताद्दर्भपू
लकात् ॥ मनाग् पिबन् गलद्वारि—विप्रुषः सुखिनाभव ॥ २ ॥ दृष्टा तस्याथ तत्वार्थ । वत्सा शृ
णुत सम्प्रति ॥ वापीकूपसरःसिंधू—दधीनामपि वारिभिः ॥ ३ ॥ प्राग् निपीतैर्यथांगार—दाहकोऽ

युगा । विप्रिवाय नाुजति जतुणो ॥ १४ ॥ मिजमणहरफासलालसा । श्रमुणिग्र दोसंगुणे सयालसा
देश० ॥ वग्गनि गयंघ वालिसा । रमणीसंगविमूढमणसा ॥ १५ ॥ इत्यादीन्यष्टनवति । काव्यान्यादिश्य
सर्ववित् ॥ सुतानप्यष्टनवति । क्रमेण प्रत्यबूबुधत् ॥ १६ ॥ प्रभोरिति गिरा जाति—स्मृतिमासाद्य
६३ समे सुता ॥ ह्योमुक्तवपुरा भुक्त । ससरु स्वर्गिणा सुख ॥ १७ ॥ चितयतिस्म सर्वार्थ—सिद्धौ
या सुखसपद ॥ एकातात्यतनिर्वाण—सुखाना वर्णिका क ता ॥ १८ ॥ नवश्रोत स्त्रवद्विस्र—रस
बीभत्सवर्ष्मणा ॥ मर्त्याना तु सुखाभासा । कामी तुच्छतरा पुन ॥ १९ ॥ युग्म ॥ अनुत्तरसुख
तेपा । सुचिर भुक्तपूर्विणा ॥ तुच्छेपु विपयेष्वेपु । न रेमेऽथ मनो मनाग् ॥ २० ॥ यत —अवि
दितपरमानदो । विपयसुख मन्यते हि रमणीय ॥ तस्यैव तैलमिष्ट । येन न दृष्ट घृत क्वापि ॥२१॥
अहमिद्रपदे नित्य । सुखिता ये चिर स्थिता ॥ भरताज्ञाकर राज्य । न तेपा रुरुचे हृदि ॥२२॥
यत —क्रीडिता ये चिर हसा । निर्मलाजसि मानसे ॥ तेपा रुचिर्न सेवाल—जटिले खातिकाम्भ
सि ॥ २३ ॥ उल्लसच्छुभभावाश्च । ततस्ते स्वामिनदना ॥ नत्वा विज्ञपयत्येव । कृताजलिपुटा प्र
भु ॥ २४ ॥ जन्ममृत्युजरारोगै—स्तावदेवात्र वाध्यते ॥ त्वद्गीरसायन शुद्ध । यावज्जतुर्न सेवते ॥

युगा देश० ६५ ॥ ३४ ॥ देवासुरसभासीनो । हत तातोऽपि तन्मुखात ॥ ज्ञात्वैतन्मदनौचित्य । मनसि त्रपस्यते मनाक् ॥ ३५ ॥ राज्यलोभाद् ध्रुव ज्येष्ट । कनिष्ठान्निरवासयत् ॥ इति तात खुराश्चापि । हत ज्ञास्यति चेतसि ॥ ३६ ॥ चक्रस्यायुधशालाया—मप्रवेशेन हेतुना ॥ प्रेरितो मन्त्रिसामतै–र्निरूपू तल्लुधा ध्रुव ॥ ३७ ॥ किच—चालनाबाहुबिलाश्च—न चलत्यग्रजाज्ञया ॥ तथापि स शुभान्वेपी । परुष तर्जयेन्न तान् ॥ ३८ ॥ यत —अतितर्जना न कार्या । शिष्यसुहृद्भृत्यसुतकलत्रेषु ॥ दध्यपि सुमथ्यमान । त्यजति स्नेह न सदेह ॥ ३९ ॥ तातोपाते ततो गत्वा । चानुनीयानुजन्म न ॥ आनयाम्यत्र राज्ये च । स्थापयामि निजे निजे ॥ ४० ॥ अष्टापदे ततो गत्वा । नत्वा च वृषभप्रभु ॥ सोदर्यान् क्षमयामास । निजागो भरत कृती ॥ ४१ ॥ आह चागत्य राज्यात–र्द्वजा ना विविध सुख ॥ निजाग्रजरमा वत्सा । कृतार्थीकुरुताधुना ॥ ४२ ॥ एव सस्नेहमाहूता । भरते नाग्रजन्मना ॥ रागद्वेषवियुक्तास्ते । नि सगा न वदत्यपि ॥ ४३ ॥ नून दूना अमी नाथ । वदती त्यसुखाग्निना ॥ दह्यमान नृप स्वामी । सिषेचेति वचोऽमृतै ॥ ४४ ॥ मा विषीद वृथा राजन् । दो दूयारेकयानया ॥ रोषतोषवशा नामी । यन्महातो महर्षय ॥ ४५ ॥ यत —शत्रो मित्रे तृणे स्त्रै

युगा यद्दत्त' भोज्यवस्त्रादि । श्रमणेभ्यः प्रयुज्यते ॥ भोक्ता' अपि 'ते' धन्या । न 'तु' राजापि' मादृश ॥५८॥
देश० एव' विषादविज्ञाया-नन' वीक्ष्याथ 'नृपति ॥ तद्विषादापनोदाय । सुरेद्र सारमिस्स्वयं ॥ ५९ ॥ कि
यतोऽवग्रहा' स्वामि-स्तेषा' दाने' च' किं' फल ॥ तत' प्रभुरवक्सौम्या—वग्रहा' पच'कीर्तिता ॥६०॥
६७ तथाहि—सौधर्माधिपतेर्मेरो-र्दक्षिणस्यामवग्रह ॥ उदिच्या' चापरेद्रस्य । देवेंद्रावग्रहो' ह्यसौ ॥६१॥
राज्ञ' पट्खडनृभर्तु-र्द्वितीय' स्यादवग्रह ॥ तृतीयो' मडलेशस्य । तुर्य' शय्यातरस्य'च ॥ ६२ ॥
साधो 'साधर्मिक 'साधु' । पचमस्तदवग्रह ॥ स्वस्वावग्रहदान'च । भवेदिष्टार्थसिद्धये ॥ ६३ ॥ सौ
धर्माधिपतिर्हृष्ट । प्रभुमेवमभाषत ॥ श्रमणानामनुज्ञात । सर्व 'स्वावग्रहो' मया ॥ ६४ ॥ तदैव 'भ
रतो' दध्यौ । साधूना' स्वमवग्रह ॥ अहमप्यनुजानामि । धन्य 'स्यामियतापि' यत् ॥ ६५ ॥ तत
स्वावग्रहानुज्ञा—भाविपुण्यफलाशया ॥ किचित्प्रमुदितस्वात । सर्वज्ञमवदन्नृप ॥ ६६ ॥ स्वैर'स
र्वत्र' नि शक्ता । पट्खडभरतावनौ ॥ विहरतु' महात्मानो-ऽनुज्ञातोऽवग्रहो' मया ॥ ६७ ॥ किच' भो
ज्यमिद' तात । कुत 'कार्य' जिनोऽप्यवक् ॥ शुद्धधर्मक्रियोद्युक्ता । स्वल्पारभपरिग्रहा ॥ ६८ ॥ इ
च्छत सर्वचारित्र । पचाणुव्रतधारिण ॥ राजन्' सत्पात्रमुच्यते । श्रमणोपासका' अपि ॥ ६९ ॥ त

ते'त'तथ्यमेवीकथन् ॥ ८१ ॥ पश्चात् शनैः शनैस्ते च । साध्वभावान्निरंकुशा ॥ सर्वदापि स्वस
तान—सुखनिर्वाहकाम्यया ॥ ८२ ॥ स्वर्णगोभूमिदानानि । स्वस्य चान्यदपि प्रियं ॥ स्वैरं भद्रक
लोकेभ्यो । महाधर्मतयावदन् ॥ ८३ ॥ युग्मं ॥ परिग्रहारम्भमग्ना । अब्रह्मनिरता अपि ॥ आत्मनि
ब्रह्मनीजल्पास्ते पात्रत्वमपि प्रथन् ॥ ८४ ॥ स्वेष्टदानक्रियाचार—गर्भितानि यदृच्छया ॥ मुग्धप्रतार
णायामी । नव्यशास्त्राण्यरीरचन् ॥ ८५ ॥ साध्वभावे च तान् मुग्धा । सद्गुरुत्वेन मेनिरे ॥ एर-
डेऽपि भवेत्पीठ । यतो निर्वृक्षनिवृतौ ॥ ८६ ॥ तदुक्तं वेदपदवत् । तथ्यं मुग्धाश्च मेनिरे ॥ जा
त्वेव किमु सदेग्धि । कर्पकोदितवर्त्मनि ॥ ८७ ॥ सुश्राद्धास्तेऽभवन्नेव । क्रमाज्जिनमतद्रुह ॥
राज्येऽनिस्वामिके किं न । तलारक्षा मलिम्लुचा ॥ ८८ ॥ इतश्च—जित्वा षट्खण्डभोक्तारं । पञ्च
शो भरतेश्वर ॥ ज्येष्ठभ्राता सहायुष्य । हा धिक् राज्यार्धिमूर्छितं ॥ ८९ ॥ इति सानुशयोऽथाशु
। कामभोगविरक्तधी ॥ जितकाश्यपि जग्राह । व्रतं बाहुबलिर्बली ॥ ९० ॥ युग्मं ॥ तातोपातमु
पेतस्या—धुना प्रव्रजिता पुरा ॥ वन्दनीया भविष्यति । कनिष्ठा भ्रातरो मम ॥ ९१ ॥ उत्पन्ने के
वलज्ञाने । तद्यास्यामि धियेति स ॥ कायोत्सर्गं विधायास्था—त्तत्रैव गिरिनिश्चल ॥ ९२ ॥ युग्मं ॥

॥ ४ ॥ अत' क्लिन्नस्य निशाद्यै—र्मलै' श्रोतोभिर्नवभिर्हि ॥ चित्यमान' किमप्यस्य । शरीरस्य 'न' शो
भते ॥ ५ ॥ यदि 'कथंचिद्यन्नेतत् । प्रलोक्येत' तथापि 'हि ॥ नैयग्रोध 'फलमिव । मध्ये 'कृमिकुला
कुल ॥ ६ ॥ इद' शरीर' कर्पूर—कस्तूरीप्रभृतीन्यपि ॥ दूषयत्येव' पाथोद—पयास्यूपरभूरिव ॥ ७ ॥
निरं
यत्कृच्छ्रकृन्मूत्रमल—स्वेदामयमयस्य' च ॥ प्रसाधन' वपुषस्तद् । गूढश्रोतोऽधिवासन ॥ ८ ॥ कि
ज्य' विषयेभ्यो' यै—स्तेपे 'मोक्षफल' तप ॥ तैरेव 'फलमेतस्य । जगृहे' तत्त्ववेदिभि ॥ ९ ॥ कि
च—अरघट्टघटीन्याये—र्नैहिरे' याहिश' हृहा ॥ कुर्वतोऽद्यापि ससारे । निर्वद्यते' न' जतव ॥ १० ॥
शुभध्यानामलजलै । स्फुरद्भिरिति' मानसे ॥ प्रक्षालिताखिलमलो । राजहसोऽभवच्छुचि ॥ ११ ॥
इत्थ श्रीसपदाभोग—सयोगेऽपि महात्मना ॥ पद्मपत्रमिवालेप—मानसो 'भरतेश्वर ॥ १२ ॥ धृतो
तपत्रो 'वारस्त्री—वीज्यमानोरुचामर ॥ अवाप 'केवलज्ञान । तदैवादर्शसद्मनि ॥ १३ ॥ युग्म ॥
अथात्तयतिनेपथ्य । कृतज्ञानोत्सव' सुरै ॥ क्षितौ 'भरतराजर्षि—र्विजहार प्रबोधयन् ॥ १४ ॥ स्वा
मी' सुता 'शत' ब्राह्मी—सुदर्यौ' च' सुते 'जज्ञे ॥ शिव' कर्मक्षयादापु । क्रमेणाष्टापदाचले ॥ १५ ॥
सुतानामष्टनवते । प्रतिबोधविधायिनी ॥ ऐहिकामुष्मिकानेक—दु कर्मफलदर्शिनी ॥ १६ ॥ आ

## (१३) दुनिया में अच्छा या बुरा कुछ भी नहीं

कल कल स्वर म नदी वह रही थी। तट पर सत बोधिसत्व खडे थे। एक पथिक ा और सत से कहा - आज का दिन वहुत अच्छा है। विवाह हुआ। जावन सगिनी ो। इतने म दूसरा पथिक गुजरा। उसने कहा आज का दिन बहुत बुरा है। पत्नी का [ हो गई। घर उजड गया। सत असमजस म डूबे। सत्य क्या है?

आखिर दिन से पूछा - तुम कैसे हो? अच्छे हो या बुरे? मौन स्वर मे दिन ने कहा सर्फ दिन हूँ, न अच्छा हूँ, न बुरा।

सत ने कहा - फिर कोई तुम्हे अच्छा कोई बुरा क्यो कहता ह?

दिन ने कहा - जो मन के रोगी ह, वे मुझे अच्छा या बुरा मानते ह।

' सत बोले - तुम्हारा आशय मैं समझा नहीं।

। दिन न कहा - मन चचल है। चचलता महामारी से भी भयानक रोग है। महामारी मृत्यु एक ही बार हाती है, मगर मन की चचलता से जन्म-जन्म में अनेक बार। इसके शिकार है उन्हे मैं अच्छा या बुरा लगता हूँ। जो इसके शिकार नही, निरोग हैं ई मैं न अच्छा लगता हूँ, न बुरा।

समाधान तर्कयुक्त था। पथिक सतुष्ट हुआ।

/ **निष्कर्ष - दिन ही नहीं, दुनिया मे कुछ भी अच्छा या बुरा नहीं। यह तो चपल ा की वाल लीला है। अच्छा या बुरा चचल मन के फफोले है।**

## 卐 पिजरे का पछी पिजरे मे रहने का आदी हो चुका है 卐

किसी म उल्लख आया है कि एक वार भगवान महावीर के पास एक ब्राह्मण हुँचा। पूछा - प्रभु ! आप सव जीवा को मुक्ति और मोक्ष की प्रेरणा देते है। यदि सार वि मुक्त हो गए ता ये सव जाव जाएँगे कहाँ? क्या स्वर्ग और उसके ऊपर का लोक नके लिए छोटा नही पड़ जाएगा? महावीर ने कहा देवानुप्रिय ! म तुम्हें इस प्रश्न । समाधान दूगा मगर इससे पहले तुम्हे मेरा एक काम करना होगा। तुम्हे आज पूर हर म जाकर यह कहना होगा - भगवान आये ह वे सवकी इच्छा पूरी करेग जिसका ( इच्छा हो उस कागज पर लिखकर दे द।

| ब्राह्मण पूरे शहर मे घूमा। अधिक स अधिक लोगा स अपनी इच्छाएँ लिखित म कर भगवान के सम्मुख पहुँचकर पत्रो का पढने लगा - किसी न सतान प्राप्ति की इच्छा रखा किसी ने दुकान चल निकलने की तरकाव पूछी। एक पत्नी न अपने पति के दुष्ट स्भाव का रोना रोया, किसी न कोर्ट-कचहरा का कस अपने पक्ष म करने का उपाय छा किसी ने पास होने का ता किसी ने चुनाव जीतन का वरदान माँगा। ब्राह्मण न सभी र्चिट्ठिया पढ़कर सुना दी। मगर आश्चर्य ! एक भी व्यक्ति एसा नही था जिसने मुक्ति ांगी हा। सभी को सासारिक सुख सुविधाओ की अभिलाषा है।

**मनुष्य को मुक्ति की अभिलाषा कहाँ है? पिंजरे का पछी पिजरे में रहने का आदी । चुका है। उसे उड़ने के लिये बाहर निकालो, तो वह और ज्यादा सिमटने लगता है।**